इति प्रथमाहुतिः । आपो वै सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोमि स्वाहा । इति द्वितीया । ततो हुतशेषं आशुः शिशान इत्यनुवाकेनाभिमन्त्र्य पुत्रैषणा वित्तैषणा लोकैषणा मया त्यक्ता स्वाहेति प्रथमां पिबेत् । ॐ ॐभूर्भुवः स्वरोम् मया संन्यस्तं स्वाहेति द्वितीयां पिबेत् । अभयं सर्वभूतेभ्यो मत्तः स्वाहेति तृतीयां पिबेत् । ततोन्यत्तोयमञ्जलिपूर्णमादाय प्रागादिदिक्षु प्रत्येकं निनयेत् । ॐभूः सावित्रीं प्रवेशयामि, ॐभुवः सावित्रीं प्रवेशयामि, ॐस्वः सावित्रीं प्रवेशयामि, ॐभूर्भुवस्स्वः सावित्रीं प्रवेशयामि इति सावित्रीप्रवेशं कृत्वा अथोर्ध्वबाहुः सूर्याभिमुखो भूत्वा ॐभूः संन्यस्तं मया, ॐभुवः संन्यस्तं मया, ॐस्वः संन्यस्तं मया, ॐभूर्भुवःस्वः संन्यस्तं मयेति प्रैषोच्चारं ब्रूयात् । एवं मन्द्रमध्योच्चैस्त्रिरुक्त्वा तूष्णीं शिखां निकृत्य स्नात्वाचम्य यज्ञोपवीतमुद्धृत्याञ्जलिना गृहीत्वा भूःस्वाहेति अप्सु हुत्वा दिगम्बरो भूत्वा पुत्रैषणावित्तैषणालोकैषणातो मुक्तोऽहमिति ब्रूयात् । अत ऊर्ध्वं न पुत्रगृहं गच्छेत् । मृते च पुरुषसूक्तेन विष्णुबुद्ध्याभिषिञ्चति संस्कारमेव कुर्यात् । एवं विरक्तस्यातुरस्य स्वस्थस्य संन्यासविहिताङ्गेषु यन्मन्त्रानुष्ठाने शक्तिर्यथाविधिस्तदनुष्ठानपूर्वकं प्रधानं प्रैषोच्चारणमात्रं मत्वा संन्यासयुक्तिरिति श्रवणात् । तदुत्तरकालमेव मृतस्योपदेशविकलस्यापि खननसंस्कारमेव कुर्यात् । जीवतश्चेच्छिखां यज्ञोपवीतं च नित्यक्रियाविधिवद्विसृज्य दण्डकाषायवस्त्रादीनि चादाय यतिधर्मानेवानुतिष्ठेत् । सद्गुरुमन्विष्य तदुपदेशं गृहीत्वा स्वधर्मनिष्ठो भवेत् । अयमर्थो विद्वत्संमतः प्रयोक्तव्यः । इत्यातुरसंन्यासः । स्मृत्यर्थसारे—'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥' तथा—'कुटीचकं तु प्रदहेत्पूरयेत्तु बहूदकम् । हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत् ॥' पालाशमूले नदीतीरेऽन्यत्र वा गन्धपुष्पालंकृतं शवं वाद्यघोषेण नीत्वा दण्डपात्रं व्याहृतिभिः स्नात्वा सप्तव्याहृतिभिस्त्रिः प्रोक्ष्य दर्भानास्तीर्य नवघटे पञ्चरत्नोदकं क्षिप्त्वा नारायणः परं ब्रह्मेत्यभिमन्त्र्य, तेनैव त्रिः-संस्नाप्याष्टाक्षरेण वस्त्रगन्धपुष्पधूपदीपान् दत्वा, विष्णो हव्यं रक्षस्वेति शवं गर्ते निधाय 'इदं विष्णुः' इति दक्षिणहस्ते दण्डं 'यदस्य पारे' इति सव्ये शिक्यं 'येन देवाः पवित्रेण' इति मुखे जलपवित्रं सावित्र्योदरे पात्रं 'भूमिः भ्रभ्रे' ति गुह्ये कमण्डलुं निधाय 'चित्तिः स्रुक्' इति दशहोत्राभिर्मन्त्रयेदिति विश्वादर्शटीकायां स्मृत्यर्थसारे च । बृहच्छौनकस्तु—'यतिं पुरुषसूक्तेन स्नापयित्वाऽर्चटं ततः । प्रणवेनाष्टवारं तं प्रोक्षयेदथ सर्वतः ॥ विष्णो हव्यं रक्षस्वेति यजुषा प्रणवेन च । गर्ते प्रेतं विनिक्षिप्य चेदं विष्णुर्विचक्रमे ॥ इति मन्त्रेण दण्डं तु दद्याद्दक्षिणहस्तके । मूर्धानं भूर्भुवः स्वश्चेत्युक्त्वा शङ्खेन भे-

दयेत् ॥ गर्तं पुरुषसूक्तेन लवणेन प्रपूरयेत् । सृगालश्वादिरक्षार्थं सम्यग्गर्तं प्रपूरयेत् ॥' इति । कुटीचकस्य तु दाहः कार्यः । यथा सर्वं 'माग्वत्कृत्वाऽग्निं प्रज्वाल्य साग्नेर्दक्षिणकरे उपावरोहेत्यवरोह्य निर्मथ्य वा गर्ते चितिं कृत्वाग्निनाग्निः समिध्यते इत्यग्निं दत्वा सावित्र्या प्रणवेन वा दहेत् । ततोऽष्टशतं प्रणवं नारायणः परं ब्रह्मेति जप्त्वा सशिरःप्रणवव्याहृत्या गायत्र्या तद्भस्मास्थीनि तीर्थे क्षिप्त्वा स्नानाच्छुचिः । नास्यान्यदौर्ध्वदेहिकम् । 'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।' इति उशनसः स्मृतेः । 'एकादशेऽह्नि पार्वणं तदपि त्रिदण्डिनः । हंसपरमहंसादीनां पार्वणादि किमपि न कार्यम् ॥' इति शूलपाणिः । श्राद्धचिन्तामणौ दत्तात्रेयः—'एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे ॥' प्रेतक्रियायैकोद्दिष्टनिषेधे सिद्धे पुनस्तद्ग्रहणमाब्दिकपरम् । तेन तत्पार्वणमेव त्रिदण्डिनां द्वादशे नारायणबलिः । तद्विधिरन्यश्च विशेषः प्रागुक्तः इत्यलं बहुना ॥

एवं निरूपितमिदं गहनं तु धर्मतत्त्वं विचार्य वचनैश्च नयैश्च सम्यक् । तद्दोषदृष्टिपराय विवेचनीयं विद्वद्भिरित्यविरतं प्रणतोस्मि तेषु ॥ १ ॥

ग्रन्थोपसंहारः ।

मया सद्वासद्वा यदिह गदितं मन्दमतिना किमेतच्छ्वयं वाध्यवसितुमपि स्वल्पमतिना । तदेवं यत्किंचिद्वदितमिह विख्यातमहिमा प्रतापोऽयं सर्वो विकसति तु पित्रोश्चरणयोः ॥ २ ॥ यो भाट्टतन्त्रगगनार्णवकर्णधारः शास्त्रान्तरेषु निखिलेष्वपि मर्मभेत्ता । योत्र श्रमः किल कृतः कमलाकरेण प्रीतोऽमुनास्तु स कृती बुधरामकृष्णः ॥ ३ ॥ श्रीभट्टरामेश्वरसूरिसूनुश्रीभट्टनारायणसूरिसूनोः । श्रीरामकृष्णस्य सुतः कृतीमं व्यधान्निबन्धं कमलाकराख्यः ॥ ४ ॥ नानानिर्णयवस्त्वान्निर्णयसिन्धुः प्रोच्यतां विबुधाः । निर्णयसरोजवत्त्वान्निर्णयकमलाकरोप्यस्तु ॥ ५ ॥ वसुऋतुऋतुभूमिते १६६८ गतेऽब्दे नरपतिविक्रमतोथ याति रौद्रे । तपसि शिवतिथौ समापितोऽयं रघुपतिपादसरोरुहेऽर्पितश्च ॥६॥ जगति सकलविद्यासिन्धुसुष्ठिधियानां परभणितिपरीक्षा युज्यते सज्जनानाम् । तदिह मम निबन्धे दूषणं भूषणं वा यदि भवति विदग्धैस्तद्ध्यवश्यं विमृश्यम् ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टसुतविद्वन्मुकुटहीराङ्कुरश्रीरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते निर्णयसिन्धौ तृतीयः परिच्छेदः ॥